# महावाक्योपनिषत्

यन्महावाक्यसिद्धान्तमहाविद्याकलेवरम् ।
विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवाः
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा सस्तनूभिः
व्यशेम देवहितं यदायुः ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥

अथ होवाच भगवान्ब्रह्मापरोक्षानुभवपरोपनिषदं व्याख्यास्यामः । गुह्याद्गुह्यपरमेषा न प्राकृतायोपदेष्टव्या । सात्विकायान्तर्मुखाय परिशुश्रूषवे । अथ संसृतिबन्धमोक्षयोर्विद्याविद्ये चक्षुषी उपसंहृत्य विज्ञायाविद्यालोकाण्डस्तमोदृक् । तमो हि शारीरप्रपञ्चमाब्रह्मस्थावरान्तमनन्ताखिलाजाण्डभूतम् । निखिलनिगमोदितसकामकर्मव्यवहारो लोकः । नैषोऽन्धकारोऽयमात्मा ।विद्या हि काण्डान्तरादित्यो ज्योतिर्मण्डलं ग्राह्यं नापरम् । असावादित्यो ब्रह्मेत्यजपयोपहितं हंसः सोऽहम् । प्राणापानाभ्यां प्रतिलोमानुलोमाभ्यां समुपलभ्यैवं सा चिरं लब्ध्वा त्रिवृदात्मनि ब्रह्मण्यभिध्यायमाने सच्चिदानन्दः परमात्माविर्भवति । सहस्रभानुमच्छुरितापूरितत्वादलिप्या पारावारपूर इव । नैषा समाधिः । नैषा योगसिद्धिः । नैषा मनोलयः । ब्रह्मैक्यं तत् । आदित्यवर्णं तमसस्तु पारे ।

सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते ।
धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः ।
तमेव विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ।
यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ।
सोऽहमर्कः परं ज्योतिरर्कज्योतिरहं शिवः ।
आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावदोम् ।
य एतदथर्वशिरोऽधीते । प्रातरधीयानो रात्रिकृतं
पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति ।
तत्सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति ।
मध्यन्दिनमादित्याभिमुखोऽधीयानः
पञ्चमहापातकोपपातकात्प्रमुच्यते ।
सर्ववेदपारायणपुण्यं लभते ।
श्रीमहाविष्णुसायुज्यमवाप्नोतीत्युपनिषत् ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवाः
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिः
व्यशेम देवहितं यदायुः ॥

ॐ शान्तिः शान्तिः शान्तिः । हरिः ॐ तत्सत्
इति महावाक्योपनिषत्समाप्ता ॥